# इन्द्रसहस्रनामस्तोत्रं गणपतेः कृतिः

इन्द्रो देवतमोऽनीलः सुपर्णः पूर्णबन्धुरः ।
विश्वस्य दमिता विश्वश्येशानो विश्वचर्षणिः ॥ १॥

विश्वानि चक्रिर्विश्वस्मादुत्तरो विश्वभूर्बृहन् ।
चेकितानो वर्तमानः स्वधयाऽचक्रया परः ॥ २॥

विश्वानरो विश्वरूपो विश्वायुर्विश्वतस्पृथुः ।
विश्वकर्मा विश्वदेवो व्हश्वतो धीरनिष्कृतः ॥ ३॥

त्रिषुजातस्तिग्मशृङ्गो देवो ब्रध्नोऽरुषश्चरन् ।
रुचानः परमो विद्वान् अरुचो रोचयन्नजः ॥ ४॥

ज्येष्ठो जनानां वृषभो ज्योतिर्ज्येष्ठं सहोमहि ।
अभिक्रतूनां दमिता धर्ता विश्वस्य कर्मणः ॥ ५॥

धर्ता धनानं धातॄणां धाता धिरो धियेषितः ।
यज्ञस्य साधनो यज्ञो यज्ञवाहा अपामजः ॥ ६॥

यज्ञं जुषाणो यजतो युक्तग्राव्णोऽवितेषिरः ।
सुवज्ज्रश्च्यवनो योद्धा यशसो यज्ञियो यहुः ॥ ७॥

अवयाता दुर्मतीनां हन्ता पापस्य रक्षसः ।
कृशस्य चोदिता कृत्रुः कृतब्रह्मा धृतव्रतः ॥ ८॥

धृणवोजा अविताधीनां धनानां सञ्जिदच्युतः ।
विहन्ता तमसस्त्वष्टा तनूपास्तरुतातुरः ॥ ९॥

त्वेषनृम्णस्त्वेष्संदृक् तुराषाडपराजितः ।
तुग्य्रावृधोदस्मतमः तुविकूर्मितमस्तुजः ॥ १०॥

वृषप्रभर्मा विश्वानि विद्वानादङ्क्षर्दिरस्तवाः ।
मन्द्रो मतीनां वृषभो मरुत्वान्मरुतामृषिः ॥ ११॥

महाहस्ती गणपतिर्धियं जिन्वो बृहस्पतिः ।
माहिनो मधवा मन्दी मर्कोऽर्को मेधिरो महान् ॥ १२॥

॥ इति प्रथमं नामशतकम् ॥

प्रतिरूपः परोमात्रः पुरुरूपः पुरुष्टुतः ।
पुरुहूतः पुरः स्थाताः पुरुमायः पुरन्दरः ॥ १३॥

पुरुप्रशस्तः पुरुकृत् पुरां दर्ता पुरूतमः ।
पुरुगूर्तः पृत्सुजेता पुरुवर्पाः प्रवेपनी ॥ १४॥

पप्रिः प्रचेतः परिभूः पनीयानप्रतिष्कुतः ।
प्रवृद्धः प्रवयाः पाता पूषण्वानन्तरा भरः ॥ १५॥

पुरुशाकः पाञ्चजन्यः पुरुभोजाः पुरुवसुः ।
पिशङ्गरातिः पपुरिः पुरोयोधः पृथुज्रया ॥ १६॥

प्ररिक्व प्रदिवः पूर्व्यः पुरोभूः पूर्वजा ऋषिः ।
प्रणेता प्रमतिः पन्यः पूर्वयावा प्रभूवसुः ॥ १७॥

प्रयज्युः पावकः पूषा पदवीः पथिकृत्पतिः ।
पुरुत्मा पलितोहेता प्रहेता प्राविता पिता ॥ १८॥

पुरुनृम्णः पर्वतेष्ठाः प्राचामन्युः पुरोहितः ।
पुरांभिन्दुरनाधृष्यः पुराजाः पप्रथिन्तमः ॥ १९॥

पृतनाषाड् बाहुशर्धी बृहद्रेणुरनिष्टृतः ।
अभिभूतिरयोपाष्टिः बृहद्रेरपिधानवान् ॥ २०॥

ब्रह्मप्रियो ब्रह्मजूतो ब्रह्मवाहा अरङ्गमः ।
बोधिन्मना अवक्रक्षी बृहद्भानुरमित्रहा ॥ २१॥

भूरिकर्मा भरेकृत्नुर्भद्रकृद् भार्वरोभृमिः ।
भरेषु हव्यो भूर्योजाः पुरोहा प्राशुषात् प्रषाट् ॥ २२॥

प्रभङ्गीमहिषो भीमो भूर्यासुतिरशस्तिहा ।
प्रसक्षी विश्पतिर्वीरः परस्पाः शवस्सस्पतिः ॥ २३॥

॥ इति द्वितीयं नामशतकम् ॥

पुरुदत्रः पितृतमः पुरुक्षुर्भीगुः पणिः ।
प्रत्वाक्षाणः पुरां दर्मापनस्युर्भिमातिहा ॥ २४॥

पृथिव्या वृषभः प्रत्नः प्रमन्दी प्रथमः पृथुः ।
त्यः समुद्रव्यचाः पायुः प्रकेतश्चर्षणीसहः ॥ २५॥

कारुधायाः कविवृधः कनीनः क्रतुमान्क्रतुः ।
क्षपावस्ता कवितमो गिर्वाहाः कीरिचोदनः ॥ २६॥

क्षपावान्कौशिकः कारी राजाक्षम्यस्य गोपतिः ।
गौर्गोर्दुरो दुरोऽश्वस्य यवस्यदुर आदुरिः ॥ २७॥

चन्द्रबुध्नश्चर्षणिप्राश्चकृत्यश्चोदयन्मतिः ।
चन्द्रभानुश्चित्रतमश्चम्रीषश्चचक्रमासजः ॥ २८॥

तुविशुष्मस्तुविद्युम्नस्तुविजातस्तुवीमधः ।
तुविकूर्मिस्तुविम्रक्षस्तुविशग्मस्तुविप्रतिः ॥ २९॥

तुविनृम्णस्तुविग्रीवस्तुविराधास्तुविक्रतुः ।
तुविमात्रस्तुविग्राभस्तुविदेष्णस्तुविष्वणिः ॥ ३०॥

तूतुजित्स्तवसस्तक्वस्तुविग्रिस्तुर्वणिस्त्रदः ।
रथेष्ठस्तरणिस्तुम्रस्त्विषीमाननपच्युतः ॥ ३१॥

तोदस्तरुत्रस्तविषी मुषाणस्तविषस्तुरा ।
तितिर्वा ततुरिस्त्राता भूर्णिस्तूर्णिस्तवस्तरः ॥ ३२॥

यज्ञवृद्धो यज्ञियानां प्रथमो यज्वनो वृधः ।
अमित्रखादोऽनिमिषो विषुणोऽसुन्वन्तोऽजुरः ॥ ३३॥

अक्षितोतिर्दाभ्योऽर्यः शिप्रिणीवानगोरुढः ।
आश्रुत्कर्णोऽन्तरिक्षप्रा अमितौजा अरिष्टुतः ॥ ३४॥

॥ इति तृतीयं नामशतकम् ॥

अदृष्ट एकराडूर्ध्व ऊर्ध्वसानः सनाद्युवा ।
स्थिरः सूर्यः स्वभूत्योजाः सत्यराधाः सनश्रुतः ॥ ३५॥

प्रकल्पः सत्त्वानां केतुरच्युतच्युदुरुव्यचाः ।
शवसी स्वपतिः स्वोजाः शचीवानविदीधयुः ॥ ३६॥

सत्यशुष्मः सत्यसत्वा सूनुः सत्यस्य सोमपाः ।
दस्योर्हन्ता दिवो धर्ता राजा दिव्यस्य चेतनः ॥ ३७॥

ऋग्मियोऽर्वा रोचमानो रभोदा ऋतपा ऋतः ।
ऋजीषी रणकृद्रेवा नृत्वियो रध्रचोदनः ॥ ३८॥

ऋष्वोरायोऽवनीराजा रयिस्थानो रदावसुः ।
ऋभुक्षा अनिमानोऽश्वः सहमानः समुद्रियः ॥ ३९॥

ऋणकातिर्गिर्वर्णस्युः कीजः खिद्वाखजङ्करः ।
ऋजीषो वसुविद्वेन्यो वाजेषु दधृषः कविः ॥ ४०॥

विरप्शी वीलितो विप्रो विश्वेवेदा ऋतावृधः ।
ऋतयुग्धर्मकृद्धेनुर्धनजिद्धामवर्मवाट् ॥ ४१॥

ऋतेजाः सक्षणिः सोम्यः संसृष्टिजिदृभुष्ठिरः ।
ऋतयुः सबलः सह्युर्वज्रवाहा ऋचीषमः ॥ ४२॥

ऋग्मीदधृष्वानृष्वौजाः सुगोपाः स्वयशस्तरः ।
स्वभिष्टिसुम्नः सेहानः सुनीतिः सुकृतः शुचिः ॥ ४२॥

ऋणयाः सहसः सूनुः सुदानुः सगणो वसुः ।
स्तोम्यः समद्वा सत्राहा स्तोमवाहा ऋतीषहः ॥ ४४॥

॥ इति चतुर्थं नामशतकम् ॥

शविष्ठः शवसः पुत्रः शतमन्युः शतक्रतुः ।
शक्रः शिक्षानरः शुष्मी श्रुत्कर्णः श्रवयत्सखा ॥ ४५॥

शतमूतिः शर्धनीतिः शतनीथः शतामघः ।
श्लोकी शिवतमः श्रुत्यं नामबिभ्रदनानतः ॥ ४६॥

शूरः शिप्री सहस्रोतिः शुभ्रः शृङ्क्षङ्गवृषोनपात् ।
शासः शाकी श्रवस्कामः शवसावानहंसनः ॥ ४७॥

सुरूपकृत्नुरीशानः शूशुवानः शचीपतिः ।
सतीनसत्वा सनिता शक्तीवानमितक्रतुः ॥ ४८॥

सहस्रचेताः सुमनाः श्रुत्यः शुद्धः श्रुतामघः ।
सत्रादावा सोमपावा सुक्रतुः श्मश्रुषु श्रितः ॥ ४९॥

चोदप्रवृद्धो विश्वस्य जगतः प्राणतस्पतिः ।
चौत्रः सुप्रकरस्रोना चक्रमानः सदावृधः ॥ ५०॥

स्वभिष्टिः सत्पतिः सत्यश्चारुर्वीरतमश्चती ।
चित्रश्चिकित्वानाज्ञाता प्रतिमानं सतः सतः ॥ ५१॥

स्थाताः सचेताः सदिवः सुदंसाः सुश्रवस्तमः ।
सहोदः सुश्रुतः सम्राट्सूपारः सुन्वतः सखा ॥ ५२॥

ब्रह्मवाहस्तमो ब्रह्मा विष्णुर्वस्वःपतिर्हरिः ।
रणाय संस्कृतो रुद्रो रणितेशानकृच्छिवः ॥ ५३॥

विप्रजूतो विप्रतमो यह्वो वज्री हिरण्ययः ।
वव्रो वीरतरोवायुर्मातरिश्वा मरुत्सखा ॥ ५४॥

गूर्तश्रवा विश्वगूर्तो वन्दनश्रुद्विचक्षणः ।
वृष्णिर्वसुपतिर्वाजी वृषभो वाजिनी वसुः ॥ ५५॥

॥ इति पञ्चमं नामशतकम् ॥

विग्रो विभीषणो वह्निर्वृद्धायुर्विश्रुतो वृषा ।
व्रजभृद्वृत्रहा वृद्धो विश्ववारो वृतञ्चयः ॥ ५६॥

वृषजूतिर्वृषरथो वृषभान्नो वृषक्रतुः ।
वृषकर्मा वृषमणाः सुदक्षः सुन्वतो वृधः ॥ ५७॥

अद्रोघवागसुरहा वेधाः सत्राकरोऽजरः ।
अपारः सुहवोऽभीरुरभिभङ्गोऽङ्गिरस्तमः ॥ ५८॥

अमर्त्यः स्वायुधोऽशत्रुरप्रतीतोऽभिमातिषाट् ।
अमत्री सूनुरर्चत्र्यः समद्दिष्टिरभयङ्करः ॥ ५९॥

अभिनेता स्पार्हराधाः सप्तरश्मिरभिष्टिकृत् ।
अनर्वास्वर्जिदिष्कर्ता स्तोतॄणामवितोपरः ॥ ६०॥

अजातशत्रुः सेनानि रुभयाव्युभयङ्करः ।
उरुगायःसत्ययोनिः सहस्वानुर्वरापतिः ॥ ६१॥

उग्रो गोप उग्रबाहुरुग्रधन्वोक्थवर्धनः ।
गाथश्रवा गिरां राजा गम्भीरो गिर्वणस्तमः ॥ ६२॥

वज्रहस्तचर्षणीनां वृषभो वज्रदक्षिणः ।
सोमकामः सोमपतिः सोमवृद्धः सुदक्षिणः ॥ ६३॥

सुब्रह्मा स्थविरः सूरः सहिष्टः सप्रथाः सराट् ।
हरिश्मशारुर्हरिवान्हरीणां पतिरस्तृतः ॥ ६४॥

हिरण्यबाहुरुर्व्यूतिर्हरिकेशो हिरीमशः ।
हरिशिप्रो हर्यमाणो हरिजातो हरिम्भरः ॥ ६५॥

हिरण्यवर्णो हर्यश्वो हरिवर्पा हरिप्रियः ।
हनिष्ठो हर्यक्ष्वो हव्यो हरिष्ठा हरियोजनः ॥ ६६॥

॥ इति षष्ठं नामशतकम् ॥

सत्वा सुशिप्रः सुक्षत्रः सुवीरः सुतपा ऋषिः ।
गाथान्यो गोत्रभिद्ग्रामं वहमानो गवेषणः ॥ ६७॥

जिष्णुस्तस्थुष ईशानो ईशानो जगतो नृतुः ।

नर्याणि विद्वान्नृपतिः नेतानृम्णस्य तूतुजिः ॥ ६८॥

निमेधमानो नर्यापाः सिन्धूनां पतिरुत्तरः ।
नर्यो नियुत्वान्निचितो नक्षद्दाभोनहुष्टरः ॥ ६९॥

नव्यो निधाता नृमणाः सध्रीचीनः सुतरेणः ।
नृतमानो नदनुमान्नवीयान्नृतमोनृजित् ॥ ७०॥

विचयिष्ठो वज्रबाहुर्वृत्रखादोवलं रुजः ।
जातूभर्मा ज्येष्ठतमो जनभक्षो जनंसहः ॥ ७१॥

विश्वाषाड्वंसगोवस्यान्निष्पाडशनिमान्नृषाट् ।
पूर्भित्पुराषाडभिषाट् जगतस्तस्थुषस्पतिः ॥ ७२॥

संवृक्समत्सुसन्धाता सुसङ्क्षद्दक्सविताऽरुणः ।
स्वर्यः स्वरोचिः सुत्रामा स्तुष्येय्यः सनजाः स्वरिः ॥ ७३॥

कृण्वन्नकेतवे केतुः पेशः कृण्वन्नपेशसे ।
वज्रेण हत्वी महिनो मरुत्स्तोत्रो मरुद्गःणः ॥ ७४॥

महावीरो महाव्रातो महाय्यः प्रमतिर्मही ।
माता मघोनां मंहिष्ठो मन्युमिर्मन्युमत्तमः ॥ ७५॥

मेषो महीवृन्मन्मदानो माहिनावान्महेमतिः ।
म्रक्षोमृलिको मंहिष्ठो म्रक्षकृत्वा महामहः ॥ ७६॥

मदचुन्मर्डितामद्वा मदानां पतिरातपः ।
सुशस्तिः स्वस्तिदाः स्वर्दृग्राधानामाकरः पतिः ॥ ७७॥

॥ इति सप्तमं नामशतकम् ॥

इषुहस्त इषां दाता वसुदाता विदद्वसुः ।
विभूतिर्व्यानाशिर्वेनो वरीयान् विश्वजिद्विभुः ॥ ७८॥

नृचक्षाः सहुरिः स्वर्वित्सुयज्ञः सुष्टुतः स्वयुः ।
आपिः पृथिव्या जनिता सूर्यस्य जनिता श्रुतः ॥ ७९॥

ष्पङ्क्षड्विवहायाः स्मत्पुतन्धिर्वृषपर्वा वृषन्तमः ।
साधारणः सुखरथः स्वश्वः सत्राजिदद्भुतः ॥ ८०॥

ज्येष्ठराजो जीरदानुर्जग्मिर्वित्वक्षणो वशी ।
विधाता विश्वमा आशुर्मायी वृद्धमहावृधः ॥ ८१॥

वरेण्यो विश्वतूर्वात्स्येशानो द्यौर्विचर्षणिः ।
सतीनमन्युर्गोदत्रः सद्योजातोविभञ्जनुः ॥ ८२॥

वितन्तसाय्यो वाजानां विभक्ता वस्व आकरः ।
वीरको वीरयुर्वज्रं बभ्रिवीरेण्य आघृणिः ॥ ८३॥

वाजिनेयो वाजनिर्वाजानां पतिराजिकृत् ।
वास्तोष्पतिर्वर्पणीतिर्विशां राजा वपोदरः ॥ ८४॥

विभूतद्युम्न आचक्रिरादारी दोधतो वधः ।
आखण्डलो दस्मवर्चाः सर्वसेनो विमोचनः ॥ ८५॥

वज्रस्य भर्ता वार्याणां पतिर्गोजिद्गवां पतिः ।
विश्वव्यचाः सङ्क्षञ्चकानः सुहार्दो जनिता दिवः ॥ ८६॥

समन्तुनामा पुरुध प्रतिको बृहतः पतिः ।
दीध्यानो दामनो दाता दीर्घश्रवस ऋभ्वसः ॥ ८७॥

दंसनावान्दिवः संम्राड्देतवजूतो दिवावसुः ।
दशमो देवता दक्षो दुध्रोद्युम्नी द्युमन्तमः ॥ ८८॥

॥ इत्यष्टमं नामशतकम् ॥

मंहिङ्क्षष्ठरातुरित्थाधीर्दीद्यानो दधृषिर्दुधिः ।
दुष्टरीतुर्दुश्च्यवनो दिवोमानो दिवोवृषा ॥ ८९॥

दक्षाय्यो दस्युहाधृष्णुः दक्षिणावान् धियावसुः ।
धनस्पृद्धृषितो धाता दयमानो धनञ्जयः ॥ ९०॥

दिव्यो द्विबर्हा सन्नार्यः समर्यस्त्राः सिमः सखा ।
द्युक्षः समानो दंसिष्ठो राधसः पतिरध्रिगुः ॥ ९१॥

सम्राट् पृथिव्या ओजस्वान् वयोधा ऋतुपा ऋभुः ।
एको राजैधमानद्विडेकवीर उरुजयाः ॥ ९२॥

लोककृज्जनिताऽश्वानां जनिता गवाम् ।
जरिता जनुषां राजा गिर्वणाः सुन्वतोऽविता ॥ ९३॥

अत्कं वसानः कृष्टीनां राजोक्थ्यः शिप्रवानुरुः ।
ईड्योदाश्वानिनतमो धोरः सङ्क्रन्दनः स्ववान् ॥ ९४॥

जागृविर्जगतो राजा गृत्सो गोविद्धनाधनः ।
जेताऽभिभूरकूपारो दानवानसुरोर्णऽवः ॥ ९५॥

धृष्विर्दमूनास्तवसस्तवीयानन्तमोऽवृतः ।
रायोदाता रयिपतिः विपश्चिद्वृत्रहन्तमः ॥ ९६॥

अपरीतः षालपश्चाद् दध्वायुत्कार आरितः ।
वोह्लावनिष्ठो वृष्ण्यावान्वृषण्वान्वृकोऽवतः ॥ ९७॥

गर्भोऽसमष्टकाव्योयुगहिशुष्मोदधृष्वणिः ।
प्रत्रः परिर्वाजदावा ज्योतिः कर्ता गिरां पतिः ॥ ९८॥

॥ इति नवमं नामशतकम् ॥

अनवद्यः सम्भृताश्वो वज्रिवादद्रिवान्द्युमान् ।
दस्मो यजत्रो योधीयानकवारिर्यतङ्करः ॥ ९९॥

पृदाकुसानुरोजीयान् ब्रह्मणश्चोदिताः यमः ।
वन्दनेष्ठाः पुरां भेता बन्धुरेष्ठा बृहद्दिवः ॥ १००॥

वरूता मधुनो राजा प्रणेनीः पप्रथी युवा ।
उरुशंसोहवंश्रोता भूरिदावा बृहच्छ्रवाः ॥ १०१॥

माता स्तियानां वृषभो महोदाता महावधः ।

सुग्म्यः सुराधाः सत्राषाडोदतीनां नदोधुनिः ॥ १०२॥

अकामकर्शनः स्वर्षाः सुमृलीकः सहस्कृतः ।
पास्त्यस्य होता सिन्धूनां वृषाभोजो रथीतमः ॥ १०३॥

सखा मुनीनां जनिदाः स्वधावानसमोऽप्रतिः ।
मनस्वानध्वरो मर्यो बृबदुक्थोऽविता भगः ॥ १०४॥

अषाह्ळोऽरीह्ळ आदर्ता वीरं कर्ता विशस्पतिः ।
एकः पतिरिनः पुष्टिः सुवीर्यो हरिपाः सुदृक् ॥ १०५॥

एको हव्यः सनादारुगोकोवाकस्य सक्षणिः ।
सुवृक्तिरमृतोऽमृक्तः खजकृद्वलदाः शुनः ॥ १०६॥

अमत्रो मित्र आकाय्यः सुदामाब्जिन् महोमही ।
रथः सुबाहुरुशना सुनीथो भूरिदाः सुदाः ॥ १०७॥

मदस्य राजा सोमस्य पीत्वीज्यान्दिवः पतिः ।
तविषीवान्धनो युध्मो हवनश्रुत्सहः स्वराट् ॥ १०८॥

॥ इति दशमं नामशतकम् ॥

॥ अत्रेमे भवन्त्युपसंहारश्लोकाः ॥

इदं सहस्रमिन्द्रस्य नाम्नां परमपावनम् ।
ऋग्वेदतो गणपतिः सङ्गृह्य विनिबद्धवान् ॥ १॥

नात्र नाम्नः पौनरुक्त्यं न च करादि पूरणम् ।
श्लोकमध्ये न चारम्या शतकस्योपसंहृतिः ॥ २॥

नाम्नामेषां छान्दसत्वात्सर्वेषां च स्वरूपतः ।
अवलोक्या यथा छन्दः शब्दशुद्धिर्विचक्षणैः ॥ ३॥

अनेकपदनामानि विनियोज्यानि पूजने ।
चतुर्थ्यन्तप्रयोगेषु व्युत्क्रमाच्च यथान्वयम् ॥ ४॥

अस्य नामसहस्रस्य वेदमूलस्य सेवने ।
पूर्णं फलं तद्विज्ञेयं यत्स्वाध्यायनिषेवणे ॥ ५॥

मन्त्रेभ्यः सम्भृतं सारमेतन्नामसहस्रकम् ।
एन्द्रं यो भजते भक्त्या तस्य स्युः सिद्धयो वशे ॥ ६॥

इन्द्रो विजयते देवः सर्वस्य जगतः पतिः ।
वेदमूलं जयत्येतत्तस्य नामसहस्रकम् ॥ ७॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिः इन्द्रसहस्रनामस्तोत्रं सम्पूर्णम् ॥